ॐ यशसे तेजसे ब्रह्मवर्चसाय बलायेन्द्रियाय वीर्यायान्नाद्याय रायस्पोषाय त्विष्या अपचित्यै ॥

इति शिरोऽभिषिञ्चेत् । पुनरञ्जलिमापूर्य्य, येन स्त्रियमिति प्रजापतिर्महापङ्क्तिरश्विनौ अभिषेके विनियोगः ।

ॐ येन स्त्रियमकृणुतं येनापामृशतꣳसुराम् ।
येनाक्षानभ्यषिञ्चतं येनेमां पृथिवीं महीम् ।
यद्वां तदश्विना यशस्तेन मामभिषिञ्चतम् ॥

इत्यनेन मूर्द्धन्यभिषिञ्च्य, पुनरादाय तूष्णीं शिरोऽभिषिञ्चेत् । तत उत्थायादित्यमुपतिष्ठेन्मन्त्रैः कृताञ्जलिः । उद्यन् भ्राजेत्यादिचतुर्णां प्रजापतिर्यजुरादित्यः उपस्थाने विनियोगः ।

ॐ उद्यन्भ्राजभृष्टिभिरिन्द्रो मरुद्भिरस्थात्सान्तपनेभिरस्थात् । शतसनिरसि शतसनिं मा कुर्वात्वाविशाम्यामाविश ॥ १ ॥ ॐ उद्यन्भ्राजभृष्टिभिरिन्द्रो मरुद्भिरस्थात्सायं यावभिरस्थात् । सहस्रसनिरसि सहस्रसनिं मा कुर्वात्वाविशाम्यामाविश ॥ २ ॥ चक्षुरसि चक्षुष्ट्वमस्यव मे पाप्मानं जहि सोमस्त्वा राजाऽवतु नमस्तेऽस्तु मा मा हिꣳसीः ॥ ३ ॥

एवमपरं मन्त्रद्वयं पठेत् । अथवा ऋष्यादिकं स्मृत्वा, प्रथमचतुर्थाभ्यां प्रातः । द्वितीयचतुर्थाभ्यां मध्यान्हे । तृतीयचतुर्थाभ्यां सायमेवमुपतिष्ठेत् । ततो मेखलामधस्तात्त्यजेदनेन मन्त्रेण । उदुत्तमं शुनःशेपस्त्रिष्टुप् वरुणो मेखलामोचने विनियोगः ।

ॐ उदुत्तमं वरुण पाशमस्मदवाधमं विमध्यमꣳ श्रथाय ।
अथादित्य व्रते वयं तवानागसो अदितये स्याम ॥

अनेनाच्छिन्नां मेखलामधस्तात्परित्यज्य, अजिनदण्डौ तूष्णीमेव परित्यजेत् । ततस्त्रिप्रभृतीन् ब्राह्मणान्भोजयित्वा, स्वयं भुक्त्वा, शिखावर्जितानि शिरोमुखस्याङ्गस्य च लोमानि नखांश्च वापयित्वा, स्नात्वाऽहते वाससी परिधाय, अलङ्कृत्य, मन्त्रेण श्वेतकुसुममालां

शिखायां कण्ठे च बध्नीयात् । श्रीरसीति प्रजापतिर्यजुः श्रीः स्रक्बन्धने विनियोगः ।

ॐ श्रीरसि मयि रमस्व ॥

ततो मन्त्रेणोपानहौ परिदध्यात् । नेत्र्यौ स्थेति प्रजापतिर्यजुरुपानहौ उपानत्परिधाने विनियोगः ।

ॐ नेत्र्यौ स्थो नयतं माम् ॥

ततो मन्त्रेण वैणवं दण्डं गृह्णीयात् । गन्धर्वोऽसीति प्रजापतिर्यजुर्दण्डः ग्रहणे विनियोगः ।

ॐ गन्धर्वोऽस्युपाव उप मामव ।

ततः शिष्यः पर्षत्सहितमाचार्यं मन्त्रेणेक्षेत् । यक्षमिवेति प्रजापतिर्यजुराचार्यः ईक्षणे विनियोगः ।

ॐ यक्षमिव चक्षुषः प्रियो वो भूयासम् ।

तत आचार्यसमीपे उपविश्य, मुखनासिकाकर्णाख्यानि सप्त प्राणायतनानि स्पृष्ट्वा मन्त्रं जपेत् । ओष्ठापिधानेति प्रजापतिरनुष्टुप् जिह्वा प्राणायतनाभिमर्शने विनियोगः ।

ॐ ओष्ठापिधाना नकुली दन्तपरिमितः पविः । जिह्वे मा विह्वलो वाचं चारु माऽद्येह वादय ॥

तत आचार्यो मधुपर्केण स्नातकमर्चयेत् । ततः स्नातको वृषभयुक्तरथस्य समीपमागत्य, रथचक्रे रथ्यवस्थाने ईषे च संस्पृशेन्मन्त्रेण । वनस्पतेति प्रजापतिस्त्रिष्टुप् रथः अभिमर्शने विनियोगः ।

ॐ वनस्पते वीड्वङ्गो हि भूया अस्मत् सखा प्रतरणः सुवीरः । गोभिः सन्नद्धो असि वीडयस्व ॥

ततो मन्त्रेण रथमारोहेत् । आ स्थात इति प्रजापतिर्यजू रथः रथारोहणे विनियोगः ।

ॐ आ स्थाता ते जयतु जेत्वानि ॥

इति मन्त्रेण रथमारुह्य, प्राङ्मुखोदङ्मुखो वा गत्वा, प्रद-

क्षिणमागत्याचार्यसमीपमागच्छेत् । ततो वामदेव्यं गायेत् । कौथु
मशाखीया अत्र स्नातकायार्हणामित्याहुः ।

इति श्रीशुक्ल श्रीविश्रामात्मज शिवरामविरचितायां गोभिलगृह्यपद्ध
सुबोधिन्यां विवाहादिसंस्कारप्रयोगः चतुर्थः प्रकाशः समाप्तः ।

## अथ पञ्चमप्रकाशः ।

### अथोपाकर्मादिकर्मणां प्रयोगः ।

तत्र भाद्रपदमासीयहस्तनक्षत्रे सशिष्यः प्राङ्मुखोदङ्मुखो
ग्रामान्निष्क्रम्य, नाभ्यूर्द्धप्रमाणं नद्यादिप्रशस्तजलाशयतीरं गत
जलेन तटं संशोध्य, तस्मिन्शुचौ देशे मृत्तिलकुशगोमयाक्षतान्य
सादयेत् । ततः पञ्च मृत्पिण्डोद्धरणादि आन्हिकप्रकरणोक्तप्रक
रेण स्नानविधिना स्नात्वा, तर्पणं विधाय, नद्यादेस्तीरे प्राक्प्र
णमुदक्प्रवणं वा स्थण्डिलं कृत्वा गोमयेनानुलिप्य, गन्ध-पुष्
पत्राक्षत-धूप-दीप-नैवेद्यादीन्पूजासम्भारांस्तत्र संस्थाप्य, यां
यवृक्षजं पीठं सकुशं प्रागग्रं उदगग्रं वा तत्र संन्यस्य, तस्मिन्पं
द्वादश दर्भवटून् संन्यसेत् ।

तत आचम्य प्राणानायम्य, गायत्र्याभिमन्त्रितेनोदके
उपहारान्त्सम्प्रोक्ष्य, देशकालौ सङ्कीर्त्य, "छन्दसामाप्यायनपूर्व
मयातयामत्वसर्वारिष्टनिवृत्तिसकलमङ्गलावाप्तिकामो वेदोपाकर
कर्मणि गौतमादिसप्तर्षीणां अरुन्धतीप्रवचनकर्तृ गोभिलाच
गणपति दुर्गासहितानां(१) पूजातर्पणादिकमहं करिष्ये" इति स
ल्प्य, ऋष्यादीनामावाहनं कुर्यात् । इममिन्द्रेति गौतमोऽनुष्
गौतमः आवाहनस्थापने विनियोगः । इति सर्वत्र । इममिन्द्रे
साम पठित्वा "गौतम इहागच्छेह तिष्ठेति" आवाहनस्था

(१) केषाञ्चिन्मते अरुन्धती गणेश गोभिलाचार्य प्रवचनक
दुर्गाः इति क्रमो विवक्षितः ।

कुर्यात् । ततः—

५ ४ ३२३ ५ २र १ २ १ २ १ ^ ३ २^

इममिन्द्रसुतम्पिबा । ज्येष्ठाममा । तिर्यमदा२म् । शुक्रा ।

३र ५ २ र १ २ १ ३र २^ ३र ५

औहो २३४ वा । स्यत्वाभ्यक्षरन् । धारा । औहो २३४ वा ।

^ ३ २ ३र ५ ४ ४

ऋता । औहो २३४ वा । स्यसा ५ दनाइ । हो ५ इ । डा ॥ गौतम इहागच्छेह तिष्ठ ।

अग्निं दूतेति भरद्वाजो गायत्री भरद्वाजः आवाहनस्थापने विनियोगः ।

५ र २ १ र र २ २ १र

अग्निं दूताम् । वृणी महाइ । होतारा२३म्वी । श्ववेदसाम् ।

१ २ १ २ र २ १ २ १ २

अस्यया २३ ज्ञा । आ । औ ३ होवा । स्यासुक्रतुम् । इडा २३ भा

१

३४३ । ओ २३४५ इ । डा ॥ भरद्वाज इहागच्छेह तिष्ठ । (१)

असाविसोम इति विश्वामित्रोऽनुष्टुप् विश्वामित्रः आ-

३ ४र ३र ४ ५ र २^ ३ ५

वाहनस्थापने वि० । असाविसोमइन्द्रते । शाविष्ठा २३४ धृ ।

२ ५ २ २ १ २र १ २ १ ^ ३

ष्णौ ३ आगा ३ ही । आत्वापृणा २३ हा ३ । क्रतुई २ न्द्रा २३४

५ १ २ ^ ३ ५ ४ ४

याम् । रजाः । सूर्यौ वा ओ २३४ वा । नरा ५ शिमभीः । हो

५ इ । डा ॥ विश्वामित्रेहागच्छेह तिष्ठ ।

५ र

पिबासुतस्येति जमदग्निर्बृहती जमदग्निः आवाहन० । पिबा-

---

(१)आत्वासहेति भरद्वाजो बृहती भरद्वाजः आवाहन० ।

५र र २ १ २ — १ र २ र र

आत्वा सहा । स्रमाशा १ ता २ मू । यूक्तारथे हिरण्यये ।

१ २ — १ २ २ १ २ — १

ब्रह्मायू १ जा २ः । हारयायि । द्रकायिशा १ यिना २ः । वहा

५ २ ^ ३ ५र र ३ ५

न्त १ सो २३ । मा २ पा २३४ औहो वा । ता २३४ ये ॥

२ — १ — १२ २
सुतस्य रसिनोमत्स्वाहाउ । नार: । इन्द्रा २ गोमता २३: । हाउ ।
२ १२९ १ २ १७ — १ २ २ २ १
आपिर्नो२ बो । धिसाधमा२ । दियवृधा२३ । हाउ । अस्मा६
२ ३२ १ ^ ३ ५२ २ २ ३
अवा२३ । हा । तुते३ हो२ । या २३४ औ होवा । धिय ऊ
११११
२३४५ ॥ जमदग्ने इहागच्छेह तिष्ठ ।

२१
इममीति वसिष्ठोऽनुष्टुप् वसिष्ठः आवाहन० । इममी २३ ।
४५४ ५ ४ ५ २ १७ — १ २
द्रसुतं पिब । ज्येष्ठाम् । अमा३र्त्तायम्मादा२म् । शुक्रास्यत्वा३ ।
१ ^३ ५ १ २̂ ३ ५ १ २̂ ३ ५
भिया२क्षा २३४रान् । धारा ओ २३४ वा । आर्त्ता ओ २३४ वा ।
४ ४
स्यसा ५ दनाइ । हो ५ इ । डा ॥ वसिष्ठेहागच्छेह तिष्ठ ।

५
कश्यपस्येति कश्यपोऽनुष्टुप् कश्यपः आवा० । कश्यपस्यसु-
५ १ २ २ १ २ ३ ४र ३ ४ ५
वर्विदा६ ए । यावाहुः स । युजावा१ इती२३४ । ययोर्विश्वमपि ।
३२ १ २ २ १ १ ^ ३ ५र २
व्रता३म् । यज्ञान्धी३राः । निचा२३ । आ२ या२३४ औहोवा ।
३ ५
ऊ२३४पा ॥ कश्यपेहागच्छेह तिष्ठ ।

५ २ १२
बृहद्वयेति अत्रिरनुष्टुबत्रिः आवाहन० । बृहद्वयाः । हिमाना
२ १ २र २१र २ १ २ १ २ ७
२३ वाइ । आर्चादेवा । य अग्ना २३ या इ । यं मित्रन्न । प्राश-
— १ २ २ ४ ५ ४ ५
स्ताया २ इ । मर्त्तासो ३ दा ३ । धिरोवा । पू ५ रो ६ हाइ ॥
अत्रेहागच्छेह तिष्ठ ।

३ २̂
इम ९ स्तोममिति कुत्सो जगत्यरुन्धती आवाहन० । इम ९
३ ५ २ ^३ ५ १२र१२ १ ३ २̂
स्तो २३४ माम् । अर्हाते २३४ जा । तावेदसे ३ । होइ । रथा-

३ ५ २ ^३ ५ १२ २ १ २ १ ३ २^
मी २३४ वा। सम्माहे २३४ मा। मानीषया ३। होइ। भद्रा-
३ ५ २ ^३ ५ १ २ १ २ १
ही २३४ नाः। प्रमाती २३४ रा। स्यास ॅ सदे ३। होइ।
३ २^ ३ ५ २ ^ ३ ५ १ २ १ २
अग्नाइसा २३४ ख्याइ। माराइषा २३४ मा। वायन्त वा ३।
१
हो २३४५ इ। डा॥ अरुन्धतीहागच्छेह तिष्ठ।

२
इष्कर्तारमध्वरेति अग्निः पङ्क्तिः प्रवचनकर्ता आवाहन०। इष्क-
१२ २ १ २ २ १ २ १ २ १ २ २ १
र्त्तारम। इडा। सुवः। इडा। ध्वरस्य प्रचे। इडा०। तसङ्क्षय-
२ २ २१ १ २ २ १ २ २ २ १ २
न्तम्। इडा०। राधसोमहः। इडा०। रातिवामास्य। हा ३१
२ १ २ २ १ २
उवा २३। सुभगांमाहिम्। हा ३१ उ वा २३। इषं दधासि।
२२ १ २
हा ३१ उवा २३। सानासि ॅ रायिम्। हा ३१ उवा २३।
३ ५ २ ३ ५
सु २३४ वाः। इह। हा ३१ उवा २३। ज्यो २३४ तीः॥
प्रवचनकर्तः इहागच्छेह तिष्ठ।

४ ५
हावास्मेति सोम उष्णिक् गोभिलः आवाहन०। हावास्मा।
३ ५ २ ^३ ५ १ ^ ३
श्या २३४ न्त्वा। वासुवी २३४ दाम्। अभा २ यिवा २३४
५ ३ २^ ३ ५ ३ ५ १२ २ २ १ २ ३ २ १
णीः। अनाओ २३४ वा। षा २३४ ता। गोभिष्टेव। णमभिवा
२ २ ३
२३। सयामसिहो २३४५ इ। डा॥ गोभिल इहागच्छेह तिष्ठ।

५२
आतून इति गौरीवितिर्गायत्री गणपतिः आवाहन०। आँ-
२ २ १ २ १ २१ १ २ १
तुनआ। द्रक्षुमा २३ न्ताम्। चाइत्रङ्ग्राभा २३ ॅ हाइ। सङ्गृ-
— १ २ २ ३ १ १ — १ १
२ भाया। महाहस्तो २३४ हाइ। दक्षा २ इणाइना। महा २३।

हा २ स्ता २३४ औहोवा । दक्षिणे ३ ना २३४५ ॥ गणेश इहागच्छेह तिष्ठ ।

उभेयदिन्द्र इति श्येनो जगती दुर्गा आवाहन० । उभे यदिन्द्ररोदसाई । आ २३ पा । प्राथ उषा ३१ उवा २३ । इव आ । महातं त्वा माहाइनाम् । संम्रौ ३ हो । जश्चर्षणा ३१ उवाये ३ । ना ३ मा । देवी जनित्रियाजी १ जाना २ त् । भद्रौ ३ हो । जानित्रिय जा ३१ उवा २३ । ए ३ । जनदा ३१ ॥ दुर्गे इहागच्छेह तिष्ठेति ।

एवमावाहनस्थापने कृत्वा अक्षतानादाय, वाक् मन इति मित्रावरुणौ गायत्री प्राणः प्रतिष्ठाकरणे विनियोगः । ॐ वाक् । मनः प्राणः प्राणोऽपानो व्यानश्चक्षुः श्रोत्रꣳशर्म वर्म भूतिः प्रतिष्ठा । एता एव समहाव्रताः सर्वा वा एता विराजो दशिनी प्रथमा विꣳशिनी द्वितीया त्रिꣳशिनी तृतीयैषा वै परमा विराड्यच्चत्वारिꣳशद्वात्रयः पङ्क्तिर्वै परमा विराट् परमायामेव विराजि प्रतितिष्ठन्ति । गौतमादिसप्तर्षयः अरुन्धतीगणेशगोभिलाचार्यप्रवर्चनकर्तृदुर्गासहिताः सुप्रतिष्ठिता वरदा भवन्त्वित्युच्चार्याक्षतान्प्रक्षिपेत् । (१)

ततः प्रणवादिचतुर्थ्यन्तनमोन्ततत्तन्नाममन्त्रैः प्रत्येकं पूजा कार्या । ऋषिर्विप्रेत्युशना त्रिष्टुप् ऋषयः पूजने विनियोगः । "ॐ ऋषिर्विप्रः पुर एता जनानामृभुर्धीर उशना काव्येन । सचिद्विवेद निहितं यदा सामपीच्य ३३ गुह्यं नामगोनाम् ।" इति

(१) अत्र ऋषिर्विप्रेति मन्त्रेण स्वस्य ऋषीणां च षोडशाङ्गेषु न्यासं कुर्यादित्याचारः ।

मन्त्रेण "गौतमाय नमः इति" च "आसनं समर्पयामि"(१)। एवं पाद्यं(२), अर्घ्यमाचमनीयं(३), मधुपर्कं, पुनराचमनीयम्। ततः स्वस्वमन्त्रैः पञ्चामृतेन स्नपनम्।

चक्रं यदस्येति अथर्वा विराडिन्द्रः पयःस्नाने वि०। ॐ चक्रं यदस्याप्स्वानिषत्ताम्। उतोतदस्मैमध्विच्चच्छा २३ द्यात्। पृथि-

---

(१)आसनं। को अद्येति अमहीयुस्त्रिष्टुप् कः सूर्यो वा आसने विनि०। कोअद्ययुङ्क्ते धुरिगाऋतस्या ६ ए। शिमीवतोभा मिनोदुर्हणा २३ यून्। आसन्नेषामप्सुवाहोमयो २३ भून्। यएषां भृत्यामृणधत्सजाई वा ३ उवा ३। ऊ ३४ पा॥

(२)पाद्यं। पदंदेवा औहोहाई। स्यामाइद्रू २३४ षाः। अनाधा २३४ हा। ष्टा भिरूता ३४। औहो वा। इहा २३४ हाइ। उहुवा २३४ भीः। भद्रास्रू। याईवोपा ३४। औहोवा। इहा०। औहो ३१२३४। दृक्। एहिया ६ हा। हो ५ ऽइ। डा॥

(३)अर्घ्यम्। आघायेत्यस्येध्मवाहो गायत्र्यग्नीन्द्रौ अर्घ्यदाने विनि०। आघाये अग्निमिन्धाताई। स्तृणन्ति बर्हिरानुषाक्। येषामिन्द्रोयुवा इहा। ऊवाइ। ऊवो २३४। वा। सा ५ खो ६ हायि॥ आचमनीयं। तद्वौहोवा। गाया २। सुताइसा २३४ चा। पुरुहूता। यसात्वा १ ना २ यि। शंयत्। हा। औ ३ होइ। गा २३४ वाइ। ना २ शा २३४ औहोवा। ए ३। किने २३४५॥

२१ २१ २ १ र २ १ र १र २र
व्यामतिषितंयदू २३ धाः । पयोगो २३ षू । आदधाओषधीषु ।
१ २ १
इडा २३ भा ३४३ । ओ २३४५ इ । डा ॥ इति गौतमादिभ्यो
दुग्धस्नानम् ।

दधिक्राव्ण इति अग्निरनुष्टुप् दधिक्राव्णः दधिस्नाने
५ ५ ४र ५र र ४ १
वि० । ओहाइ । दधिक्राव्णो अकारिषं । ओहाइ । ओहाइ ।
१ र र १ २ १ र २ १र २
जिष्णोरश्वस्य वाजिना २३ होइ । सुरभिनो मुखाका २३ रात् ।
२ २ १ १ २ १र
प्रना २३ होइ । आयू २३ हो । षितारा २३ इषा ३४३ त् ।
१
ओ २३४५ इ । डा ॥ इति दधिस्नानम् ।

घृतवतीति वरुणो जगती द्यावापृथिव्यौ घृतस्नाने त्रिनि० ।
४ ३ ५ ४ २ ३ ४र ५र ५ २ १ र र र
घृतव । ता ३ इ भुवनानाम् । अभिश्रिया । उर्वीपृथ्वीमधुदुघेसुपे-
१ १र र २र १ १
शसा २३ होइ । द्यावापृथिवीवरुणा । स्याधर्मणा २३ होइ ।
२ १ २ १ २र १र २ २
विष्काभा २३ इते । आजरे । भूरि । राये ३ । तसाउवा
२ १ २ १ २ १र २र ३ १ १ १ १
३ । ए ३ । इन्दुः समुद्रमुर्विं या विभाती २३४५ ॥ इति घृत-
स्नानम् ।

सपूर्व्यो इति प्रजापतिरनुष्टुप् इन्द्रः मधुस्नाने वि० ।
५र र र ५ २र १ र २ २ २
सपूर्व्योमहोना ६ मे । वेनः क्रतू ३ भाइरानजे ३ । हा ३ हा ।
१ २ २ १ २ र १र १ २
औ ३ हो ३ वा । आयिही २ । यस्य द्वारा ३ मानुष्पिता ३ ।
२ २ १ २ २ १ १ र २ १
हा ३ हा । औ ३ हो ३ वा । आयिही २ । दोइवेषु धा ३। औ
२ २ १ २ १ ३ ५र
३ हो ३ वा । आयिही २ । यआ २३ । ना २ जा २३४ औ
२ २ २ ३ १ १ १ १
होवा । मधुश्चुता २३४५ः ॥ इति मधुस्नानम् ।

रसन्तेति इषोवृधीयो गायत्र्यथर्वणौ शर्करास्नाने वि० ।
५ र २र १ २ १ — २ १ २ १
रसन्तेमआइ । ओ अर्यमा । पिबन्तुवा २ । रुणः कवाइ । पवमाना
— २ १ १ ^ ३ ५र र २.१र २
२ । स्यम । रु २ ता २३४ औहोवा । इषोवृधे १ ॥ इति शर्करास्नानम् ।(१)

२
अपां व्रतस्यापस्त्रिष्टुबापो देवता वरुणस्नाने वि० । हाउ ।
१र२ २ १ र २ २र१र२ २ र
३ । ऐरयत् । ३ । अपः समैरयत् । ३ । भूतमैरयत् । ३ । अपाङ्गर्भोऽग्निरिडा । पाङ्गर्भोऽग्निरिडा । २ । पृथिव्या गर्भोऽग्निरिडा । ३ ।
र र र र २ र र र
१ र २ १ २ २र१र २ १
समन्यायन्त्युपयन्ति या २३ न्याः । समानमूर्वन्नद्यः स्पृणा २३
२ १र र र२१ २ १र र
न्ती । तमूशुचि ँ शुचयो दीदिवा २३ ँ साम् । अपान्नपातमुपयन्तिया २३ पा ३ः । हा उ । ३ । ऐरयत् । ३ । अपः समैरयत् । ३ । भूतमैरयत् । ३ । अपाङ्गर्भोऽग्निरिडा । पाङ्गर्भोऽग्निरिडा ।
२ १ २ र १र२ २ १ र
२ २१र ५ २र र र र र र
२ र र र र २ र र २
२ । पृथिव्या गर्भोऽग्निरिडा । २ । पृथिव्या गर्भोऽग्निरिडा ३ । हाउवा । ए । अग्निः शिशुकः । ए । शुक्रः शिशुकः । ए । तेजः
२र २ १ २ १ र २ १ २ १ २र १र
२ १ २ १ २र १र २ १र र २ २र १ २ १ २र १ २र
शक्रस्य शर्क । ए । तेजः समाः समीचीः । ए । तेज उषोन जाः ।
१ २र १ र ३ १ १ १ १
रः । ए । सुवर्ज्योती २३४५ः । इति शुद्धोदकस्नानम् ।
२ १ १ २
ऋषिर्विप्रेति आचमनीयम् । वस्त्रम्—अभिवस्त्रा । सुवसन ।

---

( १ ) त्वमिमा ओषधीरित्यस्य सोमो विराट् सोमः ओषध्या
१ र २र र १ १ २ १र २
स्नाने वि० । त्वमिमा ओषधीः सोमविश्वाः । त्वमपो अजनयस्त्वङ्गाः । त्वमातनोरुर्वन्तरिक्षम् । त्वञ्ज्योतिषा वितमो ववर्थ ॥
१ र १ र २र १ २ १ र २र १ र २

२ ३ ४ ५ २ १ २ १ २ २ ३ ४ ५ २ १
नानियर्षा । अभिधेनुः । सुदुघाः । पूयमानाः । अभिचन्द्रा ।
२ १ २ २ ३ ४ ५ २ १ २ १ २
भर्तवे । नोहिरण्या । अभियश्वान् । रथिनः । दा ३४३ यि ।
२ ४
वा ३ सो ५ मा ६५६ः ॥

यज्ञोपवीतमन्त्रः । यज्ञोपवीतमिति मन्त्रस्य प्रजापतिस्त्रिष्टुप् छन्दः यज्ञोपवीतदेवता, यज्ञोपवीतमसीति प्रजापतिर्यजुः यज्ञोपवीतदेवता यज्ञोपवीतदाने वि० । ॐ यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात् । आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः । ॐ यज्ञोपवीतमसि यज्ञस्य त्वा यज्ञोपवीतेनोपनह्यामि ।(१)

ततश्चन्दनम् । अर्चतेति प्रियमेधानुष्टुबिन्द्रः, अर्चन्त्यर्कमिति मरुतस्त्रिष्टुबिन्द्रः, गायन्तित्वेति शिखण्ड्यनुष्टुबिन्द्रः गन्धदाने
२ २ ३ ५ २ २ ४ २ ३ ५
वि० । अर्चतप्रार्चताना २३४ राः । प्रियमेधा ३ सो ३ अर्चत ।
२ १ ४ २२३ ५ १ ३ २ २
अर्चन्तु पू २३ त्रा ३ काउत । पुरमिद्धा २३ । ष्णुवा ३ र्चा ५
४ ५ ४ १ २ १ २ १ २२
ता ६५६ ॥१॥ अर्चन्तिया । कंमरुतः सुवा २३ र्काः । आस्तो-
१ २ १२ २ २ २ २ ५
भताइ । श्रुतोयुवास आयिन्द्रा ३ उवा ३ । ऊ २३४ पा ॥ २ ॥
३ २ ३ २ ४ ५ २ २ ३ २
गाया ३१ । तित्वा ३१२३४ । गाय । त्रा ३ यिणाः । अर्चा ३१ ।

---

(१)यज्ञोपवीतम् । ब्रह्मजज्ञानमिति ऋजुस्त्रिष्टुप् ब्रह्मा
१ २ २ १
यज्ञोपवीतदाने विनि० । ब्रह्मा । ब्रा २३ ह्मा । जज्ञानम्प्रथमम्पुरा-
२ १ २ २ २ १ २ १
स्तात् । विसाई । वा २३ ईसी । मतः सुरुचोवेनआवः । सबू ।
२ २ २ २ २ १
सा २३ बू । ध्निया उपमा अस्य वायिष्ठाः । सताः । सा २३
२ २ १ २ १
ताः । चयोनिमसतश्चवाई वा ३४३ः । ओ २३४५ ई । डा ॥

तिया ३१२३४ । कम । का ३ यिणाः । ब्रह्मा ३१ । णस्त्वा

३१२३४ । शत । क्रा ३ ताउ । उद्वा ३१ । शमा ३१२३ यि ।

वया ५ यि मिरायि । हो ५ इ । डा ॥ ३ ॥ गायन्तित्वोहाइ ।

गायात्री २३४ णाः । अर्चन्त्यर्कमा १ र्का २ णाः । अर्चन्तियो

२३४ हा । कमार्का २३४ णाः । ब्रह्माणस्त्वाशता १ क्रा २ तो ।

ब्रह्माणस्त्वो २३४ हायि । शताक्रा २३४ ताउ । उद्व ५ शमि-

वया १ ईमी २ । उद्व ६ शमो २३४ हायि । वया ३ यिमा ५

यिरा ६५६ यि ॥४॥ गायन्तित्वा गायत्रिणआ । अर्चन्त्यर्कमर्का

२३ यिणाः । ब्रह्माणस्त्वा २ हो १ यि । शतक्रा २३ ताउ ।

उद्व ५ शामिवया १ यिमी ३ रे । उद्व ५ शा २३४ मी । वाया

३ उवा ३ । उप । मा ऽ २ यिरो ३५ हाइ ॥ ५ ॥

अक्षन्नमीमद इति यमः पङ्क्तिः पितरः अक्षतदाने वि० । अक्षन्नमी-

मद । तही ३ । आ २३४ । वप्रिया अधू । षता । अस्तोषतस्वभानवः ।

विप्राना २३ वी । ष्ठायामती । योजानु ३ वा ३ यि । द्रा २

ता २३४ औहोवा । हा २३४ री ॥ इति साम्ना अक्षतान्

समर्पयामि ।

पवित्रन्त इति आदित्यो जगती ब्रह्मणस्पतिः पुष्पदाने वि० ।

पवित्रन्तेविततं ब्रह्मणस्पते ३ । हुवे २३ । हुवे २३ । होवा ३ हा

२ १ १ २ २२ १ २२ १ १ १
३ । हायि । प्रभुगात्राणि परियेषि विश्वता २३ : । हुवे० । अत-
२ २ १ ९ १२ ८२ १ २३१ २ १ २ १ ९
प्तनूर्नतदा २ मो अश्नुते ३ । हुवे० । श्रृतासइद्वहन्तः सन्तदा
१ १ १ २ २ २ ५२
२ शत । हुवे २३ । हुवे २३ । होवा ३ हा ३ । हा ३४ । औ-
२ २१२ २ २ ९ १२ ९ १ १ १ १
होवा । अर्को देवाना २ म्परमेवियो २ मा २३४९ नू । अर्कपुष्पं
भवत्यन्नं वै देवा अर्क इति वदन्ति रसमस्य पुष्पामिति सरसमेवा-
न्नाद्यमवरुन्धेऽर्कपुष्पेण तुष्टुवानः ॥

२२ १
त्वेषास्तेति यमोऽनुष्टुबग्निः धूपदाने वि० । त्वेषास्ते २३
४२ ५ २ १ २ ४ २
धूम ऋण्वति हाउ । दिविसञ्छुक्रा ३ आतता ३ : । सूरोनहि
५ २ १ २ ४ २ ५ २ १२ २
हाउ । द्युतात्वा ३ मू । कृपापवा हाउ । करोचा २३ सा ३४३
१
यि । ओ २३४५ इ । डा ॥

पवमानो अजीजन इति वसिष्ठो गायत्री वैश्वानरः दीपदाने
४ ५ १२ ३ २ २ ५ २ १
वि० । पावा । मानो । अजीजा २३४ नात् । दिवश्चित्राम् ।
२ १ १२ २ २ १ १ ^ २ ५२ २ ३
नतन्यतुम् । ज्योतिर्वैश्वा २३ । ना २ रा २३४ औहोवा । बृ
५
२३४ हात् ॥(१)

---

(१)दीपं । दिवया ओवा इति विश्वेदेवास्त्रिष्टुबिन्द्रः दीपदाने० ।
१ २२ १ २ ९ २ २ १ २ १२
दिवया । ओवा । औ ३ हो ३ वा । उदुब्रह्मा । णी ३ ऐर ।
२३४ ५ २ १ २ १ २ ३ ४ ५ २२ १२
तश्रवस्या । इन्द्रं ६ समा । ये ३ मह । यावसिष्ठा । आयो विश्वा ।
२ १ २ ३ ४ ५ १ २२ १ २ ९ २ २
नी ३ श्रव । सा ततान । दि वया । ओवा । औ ३ हो ३ वा ।
१ २ २१२ २ २ ४
उपश्रोता । मईव । तो ३४३ । वा ३ चा ५९ सा ६५६ ई ॥

फलेति कश्यपास्त्रिष्टुबिन्द्रः फलदाने० । हाउ । ३ । फाल्फ ल्फल्फल्फल्फल्लू । ३ । हाउ । इन्द्रनरोनेमधि ताहवा २ न्ताइ । यत्पार्यायुनजतेधिया २ स्ताः । शूरो नृषाताश्रवसश्चका २ माइ । आगोमति व्रजेभजातुवा २ न्नाः । हाउ । ३ । फाल्फल्फ- ल्फल्फल्फल्लू । ३ । हाउ । ३ । वा । मनः सुवरिडा २३४५ ॥

अहमन्नेति दिशोऽनुष्टुप् विश्वेदेवाः नैवेद्यदाने वि०। हाउ ।३। अहमन्नं । ३ । अहमन्नादो । हमन्नादो । २ । हंविधारयो । २ । हंविधारयः । हाउ । ३ । यद्वर्चो हिरण्य । स्या । यद्वा वर्चो गवामु । ता । सत्यस्य ब्रह्मणो व । चाः । तेन मासꣳ सृजाम । साइ । हाउ । ३ । अहमन्नं० पूर्ववत् । हंविधारयः । हाउ । ३ । वा । ए । अह- मन्नमहमन्नादोहं विधारयः । ३ । ए । अहꣳ सुवर्ज्योती २३४५ः॥(१)

---

(१)ताम्बूलं। पान्तमाव इति वीतहव्योऽनुष्टुबिन्द्रः ताम्बूल- दाने० । पान्तमावो अन्धसाः । इन्द्रामाभि । प्रगायाता ३ । हा ३ हायि । विश्वासाहमू । शताक्रातू ३ मू । हा ३ हाई । म २ हायिष्ठुश्चा ३ । हा ३ हा । षणा २ यि । ना २३४ औहोवा । ऊ ३२३४ पा ॥

दक्षिणा। देवो व इत्यग्निर्बृहत्यग्निः दक्षिणादाने० । देवो ३ वो ३ द्रविणोदाः। पूर्णाविवष्ट्वासिचं। उद्वा १ सिञ्चा २। ध्व- मुपवापृणध्वं । आदिद्वोदे २ । वओहते । इडा २३ भा ३४३ । ओ २३४५ ई । डा ॥

२ १ २ १
उद्यंल्लोकेति इन्द्रोऽनुष्टुप् सूर्यः आरार्तिके वि० । उद्यंल्लोका-
२ १ २१ १२२ २ १ २१२ २२
नरोचयः । हाथि । इमां लोकानरोचयः । हाइ । प्रजाभूतमरो-

१ २ १ २ १ २ १
नमस्कारं । अधिप । ताई । मित्रप । ताई । क्षत्रप । ताई ।
२१ २ — — १ १२२२ १२ २
स्वः पताई । धनपता २ ई । ना २ माः । नमोन्नाय नमोन्नपतय
२२१२ २२ २११ २१२२१ २१२ २२ १२२१ २१२
एकाक्षाय चावपन्नादाय च नमोनमः । रुद्राय तीरसदे नमः स्थिराय
२१ २२१२१ २२ १२२१२१ २२
स्थिरधन्वने नमः प्रतिपदाय च पटरिणे च नमस्त्रियंबकाय चक्र।
१२२१ २२२२ २ २११२ २ १ २१२ २
पर्दिने च नम आश्रायेभ्यश्च प्रत्याश्रायेभ्यश्च नमः क्रव्येभ्यश्च
१२ २१ २१२ १ १२२ १२ १२ २१ २२
विरिम्फेभ्यश्च नमः संवृते च विवृते च । अव ज्यामिव धन्वनो-
१२२१ २२ १ १२ १२१२ १ २ १
विते मन्युन्नयामासि मृड ताम्न इह अस्मभ्यं । इडा२३ भा । यइदं-
२ २ १ ३ ५
विश्वम्भूतं । युयो ३। आउ । वा २३। ना २३४ माः ॥

नमोऽहमाय मोहमाय मंहमाय धून्वते तापसाय पुनर्वसवे नमो नमो मौञ्ज्यायौर्म्याय सौम्याय शम्याय शिवाय नमो नमः पाराय सुपाराय महापाराय पारदाय पारविन्दाय नमो नमः पुरुषाय सुपुरुषाय महापुरुषाय मध्यमपुरुषायोत्तमपुरुषाय ब्रह्मचारिणे नमो नम इति ।

प्रदक्षिणं । परिकोशं इति भरद्वाज उष्णिक् सोमः प्रद-
२१२ ४ ५ १२ २२१२ २
क्षिणाकरणे० । परिको ३ शम्मधुश्चुताम् । सोमः पुनानो अर्ष-
१२ १ ३ २२१२२ २ १२ ३
ति । हाये ३ । अभिवा २३४५ । णीर्ऋषीणा२ स । स्ताना ओ
५ ३ ५
२३४ वा । षा २३४ ता ॥

१ १ २ ५ २२ १ ^ ३ ५२ २
चयः । होयि । विश्वरूभूतमरोचयः । हो २ हा २३४ औहोवा ।
१२ २ ३ २ १ १ १
घर्मोऽज्योती २३४५ः ॥

ऋषिर्विमेति प्रदक्षिणा, स्तुतिः, नमस्कारः, आशीर्वादश्च ।(१)
२१ १२ २ ५ २ २ २ १ २२ ११ १ २१
आदित्यैरिन्द्रः सहसीषधातू ३ । इहा । आदित्यैरिन्द्रः सगणो-
१ २ १ २ १ २२ १२ २ १ २
मरुद्भि ३ः । इहा । अस्मभ्यं भेषजाकरा ३ तु । इहा । ए ३ ।
२ १
भद्रम् । गोतमस्य भद्रं भवत्याशिषमेवास्मा एतेनाशास्ते सा हि सत्याशीरेतेन वै गोतमो जमानं महिमानमगच्छत्तस्माद्ये च पराञ्चो गोतमाद्ये चार्वाञ्चस्त उभये गोतम ऋषयो ब्रुवते ।

एवं गौतमं सम्पूज्य, भरद्वाजं पूजयेत् एवमेव च, अथवा पदार्थानुसमयेन गौतमादीन् पूजयेत् । तत्रैवं प्रयोगः । गौतमादिभ्यः पाद्यम् । एवं भरद्वाजादिभ्यः । एवमन्ये उपचाराः । धूपदीपनैवेद्यादिकं तन्त्रेण । गौतमादिसप्तर्षिभ्यः अरुन्धतीप्रवचनकर्तृगोभिलाचार्यगणपतिदुर्गासहितेभ्यो धूपं समर्पयामि । एवं दीपादि । एवं पूजां परिसमाप्य, नाभिमात्रे जले सशिष्यास्तिष्ठन्त ऋजुकुशैर्देवतीर्थेन ऋषीनुच्चैः सिञ्चन्तस्तर्पयेयुः ।

ॐ कारो महाव्याहृतयो गायत्री ब्रह्मा वेदा देवा ऋषयश्छन्दांस्याचार्यास्तृप्यन्तामिति समुदायेन त्रिः सन्तर्प्य, ततः ॐ
१ २
ॐ कारस्तृप्यतु । ॐ भूर्भुवस्वः महाव्याहृतयस्तृप्यन्तु । ॐ तत्स-

२ २ १ २ १ २ २ २ १
(१) आर्षीः । विप्राः पुरएता । जना ३ नाम् । ऋभु-
२ १ २ १ २ ^२ ३ ४ १ २ ७
र्धीराः । उशना । काव्येना । सचिद्विवेदनिहिताम् । यदा २३
२ २ १ २ १ २ १ २ २ ४
साम् । अपायिचियाम् । गुहियम् । ना २४३ । मा ३ गो ५ ना
६५६ मू ॥

वितुर्वरेण्यं भर्गो देवस्य धीमहि। धियो यो नः प्रचोदयात्।
गायत्री तृप्यतु। सोमꣳ राजानमिति ऋगन्ते—

ॐ सोमꣳ राजानं वरुण मग्निमन्वारभामहे। आदित्यं
विष्णुꣳ सूर्यं ब्रह्माणञ्च बृहस्पतिम्। ब्रह्मा तृप्यतु।

अग्न आयाहि दशतया ऋगन्तैरर्द्धर्चैर्वा सन्तर्प्य, ततो वेदा-
स्तृप्यन्तु।

ॐ अग्न आयाहि वीतये गृणानो हव्यदातये। निहोता
सत्सि बर्हिषि ॥१॥ त्वमग्ने यज्ञानाꣳ होता विश्वेषाꣳ हितः। देवे-
भिर्मानुषे जने ॥२॥ अग्निं दूतं वृणीमहे होतारं विश्ववेदसम्।
अस्य यज्ञस्य सुक्रतुम् ॥३॥ अग्निर्वृत्राणि जङ्घनद्द्रविणस्युर्विपन्यया।
समिद्धः शुक्र आहुतः ॥४॥ प्रेष्ठं वो अतिथिꣳ स्तुषे मित्रमिव
प्रियम्। अग्ने रथं न वेद्यम् ॥५॥ त्वं नो अग्ने महोभिः पाहि
विश्वस्या अरातेः। उत द्विषो मर्त्यस्य ॥६॥ एह्यू षु ब्रवाणि
तेऽग्न इत्थेतरा गिरः। एभिर्वर्द्धास इन्दुभिः ॥७॥ आते वत्सो
मनो यमत्परमाच्चित्सधस्थात्। अग्ने त्वाꣳ कामये गिरा ॥८॥
त्वामग्ने पुष्करादध्यथर्वा निरमन्थत। मूर्ध्नो विश्वस्य वाघतः॥९॥
अग्ने विवस्वदाभरास्मभ्यमूतये महे। देवो ह्यसि नो दृशे ॥१०॥
वेदास्तृप्यन्तु।

एवं उपास्मै गायतेति उत्तराध्यायेन देवास्तृप्यन्तु।

ॐ उपास्मै गायतानरः पवमानायेन्दवे। अभि देवाꣳ इय-

३ २ ३ १ २ ३ १— २र ३२ ३ १ २
क्षते ॥ अभि ते मधुना पयोऽथर्वाणो अशिश्रयुः। देवं देवाय
३ २ १ २ ३ २उ ३ १— २र ३ १—२र १ २ ३ १
देवयु ॥ स नः पवस्व शङ्गवे शं जनाय शमर्वते। शᳪ राजन्नो-
२
षधीभ्यः ॥१॥

१ २ ३ १ २ ३ १ २ ३ २ २ ३ १—
दवि द्युतत्या रुचा परिष्टोभन्त्या कृपा। सोमाः शुक्रा
२र ३ २ ३ १ २ ३ १— २र ३क २र १ २
गवाशिरः॥ हिन्वानो हेतृभिर्हित आ वाजं वाज्यक्रमीत्। सीद-
३ १ २ २ १ २ ३ १ २ ३ २ ३ १ २
न्तो वनुषो यथा॥ ऋधक्सोम स्वस्तये सञ्जग्मानो दिवा कवे।
१ २ ३ १ २ ३ २
पवस्व सूर्यो दृशे ॥२॥

१ २ ३ २ ३ १ २ १ २ ३ १ २ ३ १
पवमानस्य ते कवे वाजिन्त्सर्गा असृक्षत। अर्वन्तो न श्रवस्य-
२ २ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ १ २ १ २
वः॥ अच्छा कोशं मधुश्चुतमसृग्रं वारे अव्यये। अवावशन्त
३ १ २ १ २ ३ १र २र ३ १ २ ३ २ ३ १ २ १ २
धीतयः॥ अच्छा समुद्रमिन्दवोऽस्तं गावो न धेनवः। अग्मन्-
३ २ ३ २ ३ २
न्नृतस्य योनिमा ॥ ३ ॥

२ ३ १ २ ३ १ २ ३ २ ३ १ २ १— २र
अग्न आयाहि वीतये गृणानो हव्यदातये। निहोता सत्सि
३ १ २ १ २ ३ १ २ ३ १ २ ३ १ २
बर्हिषि ॥ तं त्वा समिद्भिरङ्गिरो घृतेन वर्द्धयामसि। बृहच्छोचाय
१ २ ३ २ ३ २ ३ १ २ ३ १ २
विष्ठ्य॥ स नः पृथु श्रवाय्यमच्छा देव विवासासि। बृहदग्ने
३ १ २
सुवीर्यम्॥ ४ ॥

१ २ ३ १— २र २ ३ १ २
आ नो मित्रावरुणा घृतैर्गव्यूतिमुक्षतम्। मध्वा रजाᳪसि
३ १ २ ३ १ २ ३ १— २र १ २
सुक्रतु॥ उरुशᳪसा नमो वृधा मह्ना दक्षस्य राजथः। द्राघिष्ठाभिः
३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १—
शुचिव्रता॥ गृणाना जमदग्निना योना वृतस्य सीदतः। पातᳪ
२र
सोममृतावृधा ॥ ५ ॥

१ २ ३ २उ ३ २ ३ २ ३ १ २ ३ २ २उ ३ १ २ ३
आयाहि सुषुमा हित इन्द्र सोमं पिबा इमम्। एदं बर्हिः सदो
१ २ १ २ ३ २ ३ २ ३ १ २ ३ १ २ २ ३ १ २
मम ॥ आ त्वा ब्रह्मयुजा हरी वहतामिन्द्र केशिना । उप ब्रह्माणि
३ १ २ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ १
नः शृणु ॥ ब्रह्माणस्त्वा युजा वयꣳ सोमपामिन्द्र सोमिनः । सुता·
२
वन्तो हवामहे ॥ ६ ॥

१ २ ३ १ २ ३ २ ३ २उ ३ १ २ ३ १ २
इन्द्राग्नी आगतꣳ सुतं गीर्भिर्नभो वरेण्यम् । अस्य पातꣳ
३ २ ३ २ १ २ ३ १– २र ३ १ २ ३ १ २ ३ १
धियेषिता ॥ इन्द्राग्नी जरितुः सचा यज्ञो जिगाति चेतनः । अया
२ ३ २ ३ २ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २ १–
पातमिमꣳ सुतम् ॥ इन्द्रमग्निं कविच्छदा यज्ञस्य जूत्या वृणे । ता
२र ३ १ २
सोमस्येह तृम्पताम् ॥ ७ ॥

३ १ २ ३ १र २र ३ १र २र ३ २उ ३
उच्चा ते जातमन्धसो दिवि सद्भूम्या ददे । उग्रꣳ शर्म
२ ३ १ २ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १र
महिश्रवः ॥ स न इन्द्राय यज्यवे वरुणाय मरुद्भ्यः । वरिवोवित्प·
२र ३ १– २र ३ २उ ३ २ ३ १ २ १
रिस्रव ॥ एना विश्वान्यर्य आ द्युम्नानि मानुषाणाम् । सि·
२
षासन्तो वनामहे ॥ ८ ॥

३ १ २ ३ १ २ ३ १– २र १ २ ३ १–
पुनानः सोम धारयापो वसानो अर्षसि । आ रत्नधा यो·
२र ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १र २र ३ १– २र ३ २
निमृतस्य सीदस्युत्सो देवो हिरण्ययः ॥ दुहान ऊधर्दिव्यं मधु प्रियं
३ २ ३ २ ३ १ २ २ ३ २ ३ १ २ ३क २ ३ १ २ ३ १
प्रत्नꣳ सधस्थमासदत् । आपृच्छ्यं धरुणं वाज्यर्षसि नृभिर्धौतो
२ ३ २
विचक्षणः ॥ ९ ॥

१– २र ३ २ ३ २३ १ २ ३ १ २ ३ २ ३ १– २र २ ३
प्रतुद्रवपरिकोशं निषीद नृभिः पुनानो अभिवाजमर्ष । अश्वं
१ २ ३ १ २ ३ २ ३ १ २ २ १२ ३ १ २ ३ १ २
न त्वा वाजिनं मर्जयन्तोच्छा बर्हिरशनाभिर्नयन्ति ॥ स्वायुधः पव·
३ १– २र ३ २ ३ २ ३ १ २ ३ २ ३ १ २ ३ २
ते देव इन्दुरशस्तिहा वृजना रक्षमाणः । पिता देवानां जनिता

३ १ २ ३ २ ३ २ ३ १ २ ३ २ २ ३ १ २ ३ १२
सुदक्षो विष्टम्भो दिवो धरुणः पृथिव्याः ॥ ऋषिर्विप्रः पुरएता
२२ ३ १—२२ ३ २ ३ १ २ १ २ ३ १ २ ३ १ २
जनानामृभुर्धीर उशना काव्येन । सचिद्विवेद निहितं यदासाम-
२क २ २ ३ २ ३ १ २
पीच्य३ गुह्यं नाम गोनाम् ॥ १० ॥

३ १ २ ३ १ २ ३ १ २ १ २३ १२ २२
अभित्वा शूर नोनुमोदुग्धा इव धेनवः । ईशानमस्य जगतः
३ २ ३ १ २ ३ १ २ १२ २२ ३ २ ३ १२ २२ ३
स्वर्दृशमीशानमिन्द्र तस्थुषः ॥ नत्वा वा३ अन्यो दिव्योन पार्थिवो
२ ३ १— २२ ३ १ २ ३ १ २ ३ १ २
न जातो न जनिष्यते । अश्वायन्तो मघवन्निन्द्र वाजिनो गव्यन्त-
स्त्वा हवामहे ॥ ११ ॥

२ २ ३ १२ २२ ३ २ ३ १ २ ३ १ २ २ ३ १ २
कया नश्चित्र आ भुवदूती सदा वृधः सखा । कया शचिष्ठया
३ २ १ २ ३ १२ २२ ३ १ २ ३ १ २ ३ १ २
वृता ॥ कस्त्वा सत्यो मदानां म ँ हिष्ठो मत्सदन्धसः । दृढा चि-
३ २ ३ १ २ ३ २उ ३ १ २ ३ १ २ २ २ ३ १ २
दारुजे वसु ॥ अभीषुणः सखीनामविता जरितॄणाम् । शतं भवा
३ १ २
स्यूतये ॥ १२ ॥

१ २ ३ १ २३ २३ १ २ ३ १२ २२ ३ २ ३ १२
तं वो दस्ममृतीषहं वसोर्मन्दानमन्धसः । अभिवत्सन्न स्व-
२२ ३ २ ३ १ २ ३ १ २ ३ २ ३ २ ३ १ २ ३ १ २
सरेषु धेनव इन्द्रं गीर्भिर्नवामहे ॥ द्युक्ष ँ सुदा नुन्तवीषीभिरावृतं
२ १२ २२ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ १२
गिरिन्न पुरुभोजसम् । क्षुमन्तं वाज ँ शतिन३ सहस्रिणं मक्षू गो-
२२
मन्तमीमहे ॥ १३ ॥

१ २ ३ १२ ३ १ २ ३ १ २ ३ १२ ३ १२ २२ ३ १
तरोभिर्वो विदद्वसुमिन्द्र३ सबाध ऊतये । बृहद्गायन्तः सुत
२ ३ २ ३ २उ ३ २ ३ १ २ २उ ३ १२ २२ ३ २ ३ २उ ३
सोमे अध्वरे हुवे भरं न कारिणम् ॥ नयं दुध्रा वरं तेन स्थिरासुरो
१ २ ३ १२ २ २ ३ १ २ ३ १ २ ३ १२ २२ ३ २
मदेषु शिप्रमन्धसः । य आदृत्याशशमानाय सुन्वते दाता जरित्र
३क २२
उक्थ्यम् ॥ १४ ॥

स्वादिष्ठया मदिष्ठया पवस्व सोम धारया। इन्द्राय पात
सुतः॥ रक्षोहा विश्वचर्षणिरभि योनिमयोहते। द्रोणे सधस्थम
सदत्॥ वरिवो धातमो भुवो मꣳहिष्ठो वृत्रहन्तमः। पर्षि रा
मघोनाम्॥ १५॥

पवस्व मधुमत्तम इन्द्राय सोम क्रतुवित्तमो मदः। महि द्यु
तमो मदः॥ यस्य ते पीत्वा वृषभो वृषायतेऽस्य पीत्वा स्वर्विदः
स सुप्रकेतोअभ्यक्रमी दिशोच्छावाजंनै तषः॥ १६॥

इन्द्रमच्छ सुता इमे वृषणं यन्तु हरयः। श्रुष्टे जातास इन्द
स्वर्विदः॥ अयं भराय सानसिरिन्द्राय पवते सुतः। सोमो जैत्रस
चेतति यथाविदे॥ अस्येदिन्द्रो मदेष्वा ग्राभङ्गृभ्णाति सानसिम्
वज्रं च वृषणं भरत्समप्सुजित्॥ १७॥

पुरोजिती वो अन्धसः सुताय मादयित्नवे। अपश्वानꣳश्न
थिष्टन सखायो दीर्घजिह्वयम्॥ यो धारया पावकया परिप्रस्यन्द
सुतः। इन्दुरश्वो न कृत्व्यः॥ तन्दुरोषमभीनरः सोमं विश्वाच
धिया। यज्ञाय सन्त्वद्रयः॥ १८॥

अभि प्रियाणि पवते च नो हितो नामानि यह्वो अधि ये
वर्द्धते। आ सूर्यस्य बृहतो बृहन्नधि रथं विष्वञ्चमरुहद्विचक्षणः॥
ऋतस्य जिह्वा पवते मधुप्रियं वक्ता पतिर्धियो अस्या अदाभ्यः

१ २ ३२ ३ १ २ ३ २ऽ १ २ ३ २ ३ १ २ ३ २ ३ २ १ २
दधाति पुत्रः पित्रोरपीच्य ३ नाम तृतीयमधिरोचनं दिवः॥ अव
३ २ ३ १ २ ३ १ २ ३ २उ ३ १ २ ३
द्युतानः कलशा ँ अचिक्रदं नृभिर्येमाणः कोश आ हिर-
१२ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ २ ३ २ ३ १
ण्यये। अभी ऋतस्य दोहना अनूषता धित्रिपृष्ठ उषसो वि-
२
राजसि॥ १९॥

३ १ २ ३ १ २ ३ १ २ ३ २ २ २ ३ २ ३ १ २
यज्ञायज्ञा वो अग्नये गिरा गिरा चद क्षसे। प्र प्रवयममृतं
३ १ २ ३ २ ३ १र २र ३ १र २र ३ २ ३ १र
जातवेदसं प्रियं मित्रंनश ँ सिषम्॥ ऊर्जोन पात ँ सहिनाय-
२र ३ १र २र ३ १ २ २ ३ १ २ ३ १र २र ३ २ ३ २ ३ २
मस्मयुर्दाशेम हव्यदातये। भुवद्वाजेष्ववितो भुवद्वध उत त्राता
३ १ २
तनूनाम्॥ २०॥

२ २ १र २र ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
एह्यूषु ब्रवाणि तेऽग्न इत्थे तरा गिरः। एभिर्वर्द्धासइन्दुभिः॥
२ ३क २र ३ २ ३ १ ३ १ २ २ ३ १ २
यत्र क्व च ते मनो दक्षं दधस उत्तरम्। तत्र योनिं कृणवसे॥
१र २र ३ १ २ ३ १र २र २ ३ १ २
नहि ते पूर्त्तमक्षिपद्भुवन्नेमानां पते। अथादुवो वनवसे॥ २१॥

३ २ ३ १ २ ३ २उ ३ १ २ ३ १ २ १ २ ३ १
वयमु त्वामपूर्व्यस्थूरन्न कच्चिद्भरन्तोऽवस्यवः। वज्रिञ्चित्र
२ १ २ ३ १ २ ३ २ ३ २ ३ २ ३ १ २ ३ २ ३ २
ँ हवामहे॥ उप त्वा कर्मन्नूतये स नो युवोग्रश्चक्राम यो धृषत्।
१र २र ३ १ २ ३ १ २ ३ २
त्वामिद्ध्यवितारं ववृमहे सखाय इन्द्र सानसिम्॥ २२॥

२ ३क २र ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ २ ३ १ २
अधाहीन्द्रगिर्वण उप त्वा काम ईमहे ससृग्महे। उदेवग्मन्त
३ १ २ १र २र ३ २ ३ १ २ ३ १ २ ३ १ २
उदभिः॥ वार्णत्वायव्याभिर्वर्द्धन्तिशूर ब्रह्माणि। वावृध्वा ँ सं चि-
३ १ २ ३ २ ३ १ २ ३ २ ३ १ २ ३ १र २र ३ १ २
दद्रिवो दिवे दिवे॥ युञ्जन्ति हरि इषिरस्य गाथयो रौरथ उरुयुगे
३ १ २ ३ १ २ ३ १ २
वचो युजा। इन्द्रवाहा स्वर्विदा॥ २३॥ देवास्तृप्यन्तु॥

ततो भूरादिसप्तव्याहृतिभिः सन्तर्प्यान्ते ऋषयस्तृप्यन्तु ।

ॐ भूस्तृप्यतु । ॐ भुवस्तृप्यतु । ॐ स्वस्तृप्यतु । ॐ महस्तृप्यतु । ॐ जनस्तृप्यतु । ॐ तपस्तृप्यतु । ॐ सत्यं तृप्यतु । ॐ ऋषयस्तृप्यन्तु ।

ततो अग्न आयाहि इत्यादि तत्तच्छन्दस्काभिर्ऋग्भिश्छन्दांसि तर्पयेयुः । अग्न आयाहिऋगन्ते, गायत्री तृप्यतु । ॐ अग्न आयाहि वीतये गृणानो हव्यदातये । नि होता सत्सिबर्हिषि ॥ गायत्री तृप्यतु ।

एवं पुरुत्वान्ते उष्णिक् । एवं प्रथमया तर्पणम् । न तु गायत्रीं, उष्णिहं इत्येवम् ।

पुरु त्वा दाशिवाङ्वोऽचेरिरग्ने तव स्विदा । तोदस्येव शरण आमहस्य ॥ उष्णिक् तृप्यतु ।

अग्न ओजिष्ठमाभर द्युम्नमस्मभ्यमध्रिगो । प्रनो रायेपनीयसे रत्सि वाजाय पन्थाम् ॥ अनुष्टुप् तृप्यतु ।

यज्ञायज्ञा वो अग्नये गिरा गिरा च दक्षसे । प्र प्रवयममृतं जातवेदसं प्रियं मित्रं नश ऽ् सिषम् ॥ बृहती तृप्यतु ।

स्वादोरित्था विषूवतो मधोः पिबन्ति गौर्यः । या इन्द्रेण सयावरीर्वृष्णा मदन्ति शोभथा वस्वीरनु स्वराज्यम् ॥ पङ्क्तिस्तृप्यतु ।

आ जुहोता हविषामर्जयध्वं निहोतारं गृहपतिं दधिध्वम् । इडस्पदे नमसारात हव्यं सपर्यता यजतं पस्त्यानाम् ॥ त्रिष्टुप् तृप्यतु ।

३ २उ ३ १ २ ३ २ ३ २ ३ १२ ३ २ ३ १ २
चित्र इच्छिशोस्तरुणस्य वक्षयो नयो मातरावन्वेति धातवे ।
३ १र २र ३ १ २ ३ २३१ ३ १ २ ३ २ १ २
अनुधायदजीजनदधा चिदाववक्षत्सद्योमहि दूत्य ३ चरन् ॥ जगती तृप्यतु । छन्दांँसि तृप्यन्तु ।

१ २ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
प्रवो महे मतयो यन्तु विष्णवे मरुत्वते गिरिजा एवया मरुत् ।
१र १र २ १र २र ३ १ २ ३१ २ ३ १ २ ३ २ ३ १ २
प्रशर्द्धाय प्रयज्यवे सुखादये तवसे भन्ददिष्टये धुनिव्रताय शवसे ॥ अतिजगती तृप्यतु ।

१ २ ३ १र २र ३ १ २ ३ १ २ ३ २
प्रोष्वस्मै पुरो रथ मिन्द्राय शूषमर्चत । अभीकेचिदुलोकक्कृ-
३ २ ३१ २ ३ २ ३ १ ४ ३ १र २र ३ १ २
त्सङ्गे समत्सु वृत्रहा । अस्माकं बोधि चोदितानभन्तामन्यकेषां
३ १ २
ज्याका अधिधन्वसु ॥ शक्करी तृप्यतु ।

२३ १र २र ३ १ २ ३ १र २र ३ २ ३ १ २ ३ २
तवत्यं नर्यं नृतोप इन्द्रप्रथमं पूर्व्यं दिवि प्रवाच्यं कृतम् ।
२ ३ ३ १ २ ३ १ २ ३ १ २ ३ २ ३२ २ ३ १ २ ३ १२ ३
यो देवस्य शवसा प्रारिणा असुरिणन्नपः । भुवो विश्वमभ्यदेव-
१ २ ३ १र २र ३ १ २ ३ १र २र
मोजसा विदे दूर्जं शतक्रतुर्विदेदिषम् ॥ अतिशक्करी तृप्यतु ।

१ २ ३ १र २र ३ २ ३ १र २र ३ १
त्रिकद्रुकेषु महिषो यवाशिरन्तु विशुष्मस्तृम्पत्सोममपिबद्वि-
२ ३१ २ ३२ १२ ३२ ३ २ ३ १ २ ३ २ ३ १र
ष्णुना सुतं यथा वशम् । सईं ममादमहि कर्म कर्त्तवे महामुरु
२र ३ २ ३ २ ३ १र २र ३ १र २र
ꣳ सैन ꣳ सश्चद्देवोदेव ꣳ सत्य इन्दुः सत्यमिन्द्रम् ॥ अष्टिस्तृप्यतु ।

२ ३ १ २ ३ २ ३ २ ३ १ २ ३ १र २र ३ १
अस्तु श्रौषट् पुरो अग्नि धिया दध आनुत्यच्छर्द्धो दिव्यं
२ ३ १ २ २ ३ १ २ ३ १ २ ३ १ २ ३ २ ३
वृणीमह इन्द्रवायू वृणीमहे । यद्धक्राणा विवस्वते नाभा सन्दाय
१ २ २ ३ २ ३ १र २र ३ १ २ ३ २उ ३ २ ३ १ २
नव्यसे । अधप्रनूनमुपयन्ति धीतयो देवा ꣳ अच्छान धीतयः ॥
अत्यष्टिस्तृप्यतु ।

२ १ २ १२ २२१२ २
घर्मः प्रवृक्तस्तन्वासमानृधवृधे ॥ धृतिस्तृप्यतु ।
१ २ १ २ १ २२२ १
सर्पत प्रसर्पत सुवर्गमेतेनयम् ॥ अतिधृतिस्तृप्यतु । अति-
च्छन्दाꣳसि तृप्यन्तु ।
१ २१ २ २ १ २१२ १२ २
सं यमन्न व्यायमन्वियमन्नसमायमन् ॥ कृतिस्तृप्यतु ।
२ २ १२ २ २ २१ २१२१२१
चराचराय बृहत इदं वाममिदं बृहत् ॥ प्रकृतिस्तृप्यतु ।
१२ २२ ३ २ १ २
द्यौरक्रान्भूमिरततनत्समुद्र ꣳ समचुकुपत् ॥ आकृतिस्तृप्यतु ।
१२ २ १ २ १ २ १२ २ १ २
ज्योतिष्पत स्वः पतान्तरिक्षं पृथिवीं पञ्च प्रदिशः ॥ विकृति-
स्तृप्यतु ।
१ २२ १ २ १ २ २ १ २
मनोजायिद्धृदयमजयिदिन्द्रो जयिदहमजैषम् ॥ सङ्कृतिस्तृप्यतु ।
१२ २ २१ २२२ १ २ २ २ १ २
प्रागन्यदनु वर्त्ततेरजोपागन्यतमो पेषति भूयसा ॥ अभिकृति-
स्तृप्यतु ।
१ २ १ १ २ १ १ २ १ १ २ १
आधिप । ताई । मित्रप । ताई । क्षत्रप । ताई । स्वः पताइ ।
१ २ — — १
धनपता २ यि । ना २ माः ॥ उत्कृतिस्तृप्यतु । विच्छन्दाꣳसि
तृप्यन्तु ।

ततो वंशीयानामृषीणां प्रतिनामाभिः प्रथमया तर्पणम् । तद्यथा-
ॐ नमो ब्रह्मणे नमो ब्राह्मणेभ्यो नम आचार्येभ्यो नम ऋषिभ्यो
नमो देवेभ्यो नमो वेदेभ्यो नमो वायवे च मृत्यवे च विष्णवे च नमो
वैश्रवणाय चोपजाय च । इत्याद्युपजायचेत्यन्तं कृताञ्जलि पठित्वा,
नमस्कृत्य तर्पयेत् । ॐ शर्वदत्तस्तृ० । रुद्रभूतिस्तृ० । त्रातस्तृ०
।निगडस्तृ० । गिरिशर्मास्तृ० । ब्रह्मवृद्धिस्तृ० । मित्रवर्चास्तृ० ।
सुप्रतीकस्तृ० । बृहस्पतिगुप्तस्तृ० । भवत्रातस्तृ० । कुस्तुकस्तृ० ।
श्रवणदत्तस्तृ० । सुशारदस्तृ० । ऊर्जयꣳस्तृ० । मानुमाठस्तृ० ।

आनन्दजस्तृ०। शाम्बस्तृ०। काम्बोजस्तृ०। मद्रगारस्तृ०। सातिस्तृ०। सुश्रवास्तृ०। प्रातरन्हस्तृ०। केतुस्तृ०। मित्रविन्दस्तृ०। सुनीथस्तृ०। सुतेमनास्तृ०। अंशुस्तृ०। अमावास्यास्तृ०। राधस्तृ०। गातास्तृ०। संवर्गजितस्तृ०। शाकदासस्तृ०। विचक्षणस्तृ०। गर्दभीमुखास्तृ०। उदरशाण्डिल्यस्तृ०। अतिधन्वास्तृ०। मशकस्तृ०। स्थिरकस्तृ०। वसिष्ठस्तृ०। वासिष्ठस्तृ०। सुमन्त्रस्तृ०। शूषस्तृ०। राळस्तृ०। दृतिस्तृ०। इन्द्रोतास्तृ०। वृषशुष्णस्तृ०। निकोथकस्तृ०। प्रातिथिस्तृ०। देवतरास्तृ०। शवसस्तृ०। अग्निभूस्तृ। इन्द्रभूस्तृ०। मित्रभूस्तृ०। विभण्डकस्तृ०। ऋष्यशृङ्गस्तृ०। कश्यपस्तृ०। अग्निस्तृ०। इन्द्रस्तृ०। वायुस्तृ०। मृत्युस्तृ०। प्रजापतिस्तृ०। ब्रह्मा तृ०।

ततोऽग्न्यादीनां तर्पणम्। अग्निस्तृ०। प्रजापतिस्तृ०। विश्वेदेवास्तृप्यं०। ॐ कारस्तृ०। वषट्कारस्तृ०। महाव्याहृतयस्तृप्यं०। गायत्री तृ०। ब्रह्मातृ०। विष्णुस्तृ०। वेदास्तृप्यं०। देवास्तृप्यं०। ऋषयस्तृप्यं०। मुनयस्तृप्यं०। आचार्यास्तृप्यं०। पुराणानि तृप्यं०। छन्दाꣳसि तृप्यं०। यज्ञास्तृप्यं०। अध्ययनं तृप्य०। द्यावापृथिव्यौ तृप्येताम्। अन्तारिक्षं तृ०। अहोरात्राणि तृप्यं०। मासास्तृप्यं०। ऋतवस्तृप्यं०। संवत्सरस्तृ०। वरुणस्तृ०। समुद्रास्तृप्यं०। नद्यस्तृप्यं०। गिरयस्तृप्यं०। क्षेत्राणि तृप्यं०। वनानि तृप्यं०। ओषधयस्तृप्यं०। वनस्पतयस्तृप्यं०। पशवस्तृप्यं०। नागास्तृप्यं०। उरगास्तृप्यं०। सुपर्णास्तृप्यं०। वयाꣳसि तृप्यं०। गावस्तृप्यं०। वसवस्तृप्यं०। रुद्रास्तृप्यं०। आदित्यास्तृप्यं०। मरुतस्तृप्यं०। सिद्धास्तृप्यं०। साध्यास्तृप्यं०। गन्धर्वास्तृप्यं०। पिशाचास्तृप्यं०। यक्षास्तृप्यं०। रक्षाꣳसि तृप्यं०। भूतानि तृप्यं०। नक्षत्राणि तृप्यं०। अश्विनौ तृप्येताम्। अप्सरसस्तृप्यं०। चतुर्विधभूतग्रामस्तृ०। मरीचिस्तृ०। अत्रिस्तृ०। अङ्गिरास्तृ०। पुळस्त्यस्तृ०। पुळहस्तृ०। क्रतुस्तृ०। प्रचेतास्तृ०। वसिष्ठस्तृ०। भृगुस्तृ०। नारदस्तृ०। सप्तर्षयस्तृप्यं०।

अरुन्धती तृ० । गोभिलाचार्यस्तृ० । एवमादयः एते मे स्वस्ति कुर्वन्तु तर्पिताः स्वस्ति कुर्वन्तु तर्प्पिताः ।

अथापसव्येन तिलैर्द्विगुणदर्भैः पितृतीर्थेन । ॐकारो महाव्याहृतयो गायत्री ब्रह्मा वेदा देवा ऋषयः पितरश्छन्दास्याचार्यास्तृप्यन्ताम् । एवं त्रिः । राणायनिस्तृ० । शाट्यमुग्रस्तृ । व्यासस्तृ० । भागुरिस्तृ० । औगुंडिस्तृ० । गौल्गुलविस्तृ० । भानुमानौपमन्यवस्तृ० । काराटिस्तृ० । मशको गार्ग्यस्तृ० । वार्षगण्यस्तृ० । कौथुमिस्तृ० । शालिहोत्रस्तृ० । जैमिनिस्तृ० । त्रयोदशैते मे सामगाचार्याः स्वस्ति कुर्वन्तु तर्पिताः स्वस्ति कुर्वन्तु तर्पिताः ।

शटिस्तृ० । भालवविस्तृ० । काललबविस्तृ० । ताण्ड्यस्तृ० । वृषाणकस्तृ० । रुरुकिस्तृ० । शमबाहुस्तृ० । अगस्त्यस्तृ० । बष्कशिरास्तृ० । हूहूस्तृ० । दशैते मे प्रवचनकर्त्तारः स्वस्ति कुर्वन्तु तर्पिताः स्वस्ति कुर्वन्तु तर्पिताः ।

कव्यवालस्तृ० । नलस्तृ० । सोमस्तृ० । यमस्तृ० । अर्यमास्तृ० । अग्निष्वात्तास्तृप्यं० । सोमपास्तृप्यं० । बर्हिषदस्तृप्यं० । यमस्तृ० । धर्मराजस्तृ० । मृत्युस्तृ० । अन्तकस्तृ० । वैवस्वतस्तृ० । कालस्तृ० । सर्वभूतक्षयस्तृ० । औदुम्बरस्तृ० । दध्नस्तृ० । नीलस्तृ० । परमेष्ठी तृ० । वृकोदरस्तृ० । चित्रस्तृ० । चित्रगुप्तस्तृ० ।

तत उत्तरवंशीयानाम् । ॐ आचार्येभ्यो नमस्कृत्वाथ वंशस्य कीर्तयेत् । स्वधा पूर्वेषां भवति नेतायुर्दीर्घमश्नुत इत्युक्त्वानुक्रामेद्वंशमाब्रह्मणो । अर्यमभूतिस्तृ० । भद्रशर्मा तृ० । पुष्पयशसस्तृ० । सङ्करस्तृ० । अर्यमराजगोभिलस्तृ० । पूषमित्रगोभिलस्तृ० । अश्वमित्रगोभिलस्तृ० । वरुणमित्रगोभिलस्तृ० । मूलमित्रगोभिलस्तृ० । वत्समित्रगोभिलस्तृ० । गौल्गुलवीपुत्रगोभिलस्तृ० । बृहद्वसुगोभिलस्तृ० । राधस्तृ० ।

ततो राधादिद्वितीयखण्डोक्तांस्तर्पयेत् । राधस्तृ० । गाता तृ० ।

संवर्गजितस्तृ० । शाकदासस्तृ० । विचक्षणस्तृ० । गर्दभीमुखास्तृ० । उदरशाण्डिल्य० । अतिधन्वा० । मशक० । स्थिरक० । वसिष्ठ० । वासिष्ठ० । सुमन्त्र० । शूष० । राळ० । द्दति० । इन्द्रोता० । वृषशुष्ण० । निकोथक० । प्रातिथिस्तृ० । देवतरस० । शवस० । अग्निभुव० । इन्द्रभुव० । मित्रभुवस्तृ० । विभण्डक० । ऋष्यशृङ्ग० । कश्यप० । अग्नि० । इन्द्र० । वायु० । मृत्यु० । प्रजापति० । ब्रह्मा तृप्यतु ।

ततः समाचारान्निवीती सनकादीन्सन्तर्प्याचम्य, ॐ सनकस्तृ० ।२। सनन्दनस्तृ० ।२। सनातन० ।२। कपिल० ।२। आसुरि० ।२। वोढुस्तृ० । पञ्चशिखस्तृप्यतु ।२। ऋषीन्सम्पूज्य, ऋषिश्राद्धं कृत्वा, ऋषिमाल्यमादाय, प्लवसाम्ना तद्ब्राह्मणेन च सम्प्लाव्य (उत्सर्गप्रयोगे २७४ पृष्ठे प्लवसाम द्रष्टव्यम् ), निमज्याचम्य, अरिष्टसामानि पठित्वा (१७ पृष्ठे द्रष्टव्यानि), ऋषीनादाय गृहमागच्छेयुः । इति ऋषितर्पणप्रयोगः ।

## अथोपाकर्मप्रयोगः ।

तत्र येषां ब्रह्मचारिणां पूर्वव्रतान्तश्रुतस्य वेदस्य प्रथमारम्भस्तेषामत्र वृद्धिश्राद्धम् । आनीतानृषीन् शुभपीठाद्यासने कुशोपरि संस्थाप्य पाद्यादिभिरुपचारैः सम्पूज्याचम्य, शालाग्नेः पश्चादुपविश्याग्नौ समिधं हुत्वा, न्यञ्चकरणपरिसमूहने कृत्वा, ब्रह्माणमुपवेश्याज्यतन्त्रेणादनम् । तत्र विशेषः–रक्षा, धाना, दधि आसाद्य, सम्प्रोक्ष्य, देशकालौ सङ्कीर्त्य "छन्दोयातयामत्वनिवृत्तये नित्यविधिरूपमुपाकर्माङ्गहोममहं करिष्ये" इति सङ्कल्प्याऽग्निं परिस्तीर्य, इध्ममभ्याधायाज्यं संस्कृत्य, पर्युक्ष्य, प्रपदवैरूपाक्षं जपेत् । ततः स्रुवं सम्मार्ज्य, व्याहृतित्रयं हुत्वा, पङ्क्त्याकारेण उपविष्टान् शिष्यान्पाठयेद्गायत्रीं संहितावत् ।

१ २ ३ १र २र ३      १ २ ३ १ २
ॐ "तत्सवितुर्वरेण्यम्" इति प्रथमम् । ततो "भर्गो देवस्य

२ ३ १ २ ३ १ २
धीमहि" । ततो "धियो यो नः प्रचोदयात्" । ततोऽर्द्धर्चशः । पुनः

४२ ५ ४ ५२ ४ ५ ४ २ १
समस्ताम् । ततः सावित्रं साम । ॐ सोमꣳ राजानं वरुणाम् । अग्नि-
२२ २ १ २ २ २२ १ २ १२ १२
मन्वार भामहे ३। होवा३हायि । आदित्यं विष्णुꣳ सूर्यम् । होवा
२ २ १५ २ १ २ २ . १ २ २
३ हायि । ब्रह्माणा २३ श्वा ३। होवा ३ हायि । बृहा ३ उवा
३ ५
३। पा २३४ तीम् ॥

४
ततो वेदस्य आदितः पर्वनामानि पाठयेत् । ॐ ओग्नायि ।
५ २ ४ ५ ५ ४
तद्वोहोवा । उच्चा । एवम् । ( पृष्ठे २७०, पङ्क्तौ १६ द्रष्टव्यानि । )
३ १ २ ३ १ २ ३ २ ३ १ २
ततः छन्दोहोमः । ॐ अग्न आयाहि वीतये गृणानो हव्यदातये ।
१ २ ३ १ २
निहोता सत्सि बर्हिषि स्वाहा । एवं हुत्वा । इदं गायत्र्यै न ममेति
त्यागः, एवं सर्वत्र ।
३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ २ ३ १ २
ॐ पुरु त्वा दाशिवाꣳ वोचेरिरग्ने तव स्विदा । तोदस्येव
३ २ ३ १ २
शरण आ महस्य स्वाहा । इदं उष्णिहे० ।
२ ३ १ २ ३ १ २ ३ १ २ ३ २ २ १ २ ३ १२ २२
ॐ अग्न आजिष्ठुमाभर द्युम्नमस्मभ्यमध्रिगो । प्र नो राये पनी
३ २ ३ १ २ ३ १ २
यसे रत्सि वाजाय पन्थाम् स्वाहा । इदं अनुष्टुभे० ।
३ १ २ २ १ २ ३ १ २ ३ १ . १ २ ३ २ ३
ॐ यज्ञा यज्ञा वो अग्नये गिरा गिरा च दक्षसे । प्र प्र वयम-
१ २ ३ १ २ ३ २ ३ १२ २ २
मृतं जातवेदसं प्रियं मित्रं नशꣳ सिषम् स्वाहा । इदं बृहत्यै० ।
३ २ ३ १ २ ३ २ ३ १ २ ३क २ १२ २२
स्वादोरित्था विषूवतो मधोः पिबन्ति गौर्यः । या इन्द्रेण
३ १ २ ३ २ ३ १ २ ३ २ ३ १ २ ३ १ २
सयावरीर्वृष्णा मदन्ति शोभथा वस्वीरनु स्वराज्यं स्वाहा ।
इदं पङ्क्त्यै० ।
१ २ ३ १ २ ३ १२ २२ ३ १ २
आ जुहोता हविषामर्जयध्वं नि होतारं गृहपतिं दधिध्वम् ।

३२ ३१र २र २ १ २ ३ १ २ ३ २ क३ २र
इडस्पदे नमसा रात हव्यꣳ सपर्यता यजतं पस्त्यानाम् स्वाहा ।
इदं त्रिष्टुभे० ।

३ २उ ३ १ २ ३ २ ३ २उ ३ १२ ३ २ ३ १ २
चित्र इच्छिशोस्तरुणस्य वक्षथो नयो मातरावन्वेति धातवे ।
३ १र २र ३१ २ ३ २ ३ १२ ३ १र ३र ३ २ २
अनुधायदजीजनदधाचिदा ववक्षत्सद्योमहि दूत्य३ श्चरन् स्वाहा ।
इदं जगत्यै० ।

१ २३२ ३१ २ ३ १ २ ३१२ ३ १ २ ३ १ २
प्रवोमहे मतयो यन्तु विष्णवे मरुत्वते गिरिजा एव या मरु-
१र २र३ १र २र ३ १ २ ३१ २ ३ १ २ ३ १ २ ३
त् । प्रशर्द्धाय प्रयज्यवे सुखादये तवसे भन्दादिष्टये धुनि व्रताय
१ २
शवसे स्वाहा । इदं अतिजगत्यै० ।

१ २ ३ १र २र ३ १ २ ३ १ २ ३ २
प्रोष्वस्मै पुरोरथ मिन्द्राय शूषमर्चत । अभि केचिदुलोक कृत्
३ २ ३ १ २ ३ १ ३ १ २ ३ १र २र ३ १ २ ३
सङ्गे समत्सुवृत्रहा । अस्माकं बोधि चोदितानभन्तामन्यकेषां ज्या-
२उ ३ १ २
का अधि धन्वसु स्वाहा । इदं शक्वर्यै० ।

२ ३ १र २र ३ १ २ ३ १र २र ३ २ ३ १ २ ३ २
तव त्यं नर्यं नृतोप इन्द्र प्रथमं पूर्व्यं दिवि प्रवाच्यं कृतम् ।
२ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ २ ३ २ २ ३ १ २ ३ १ २ ३
यो देवस्य शवसा प्रारिणा असुरिणंनपः । भुवो विश्वमभ्य देव
१ २ ३ १र २र ३१ २ ३ १र २र
मोजसा विदेदूर्जꣳ शतक्रतुर्विदे दिषं स्वाहा । इदमतिशक्वर्यै० ।

१ २ ३ २ २र ३ २ ३ १र २र ३
त्रिकद्रुकेषु महिषो यवाशिरन्तु विशुष्मः स्तृम्पत्सोममपिब-
१ २ ३ २ ३ २ १ २ ३ १ ३ २३ १ २ ३ २ ३ १र
द्विष्णुना सुतं यथा वशम् । स ईं ममाद महि कर्म कर्त्तवे महामुरुꣳ
२र ३ २ ३ २ ३ १र २र ३ १र २र
सैनꣳ सश्चद्देवो देवꣳ सत्यइन्दुः सत्यमिन्द्रं स्वाहा । इदमष्ट्यै० ।

२ १ २ ३ २ ३ १ ३ १ २३ १र २र ३ १
अस्तु श्रौषट् पुरो अग्निं धिया दध आनुत्यच्छर्द्धो दिव्यं
२ २ १ २ २ ३ १ २ ३१ २ ३ २ ३ १ २ ३
वृणीमह इन्द्रवायू वृणीमहे । यद्धक्राणा विवस्वते नाभा सन्दाय

१ २ २३ २३१२ २२ ३ १ २ ३ १ २ ३ २ ३ १२
नव्यसे । अधप्रनूनमुपयन्ति धीतयो देवाᳲ अच्छा न धीतयः स्वाहा । इदमत्यष्ट्यै० ।

२१ २ १२ २२१२ २
घर्मः प्रवृक्तस्तन्वा समानृधे वृधे स्वाहा । इदं धृत्यै० ।

१ २ २ २ १ २ २ २ १
सप्यर्त प्रसर्पत सुवर्ग मे मते वयं स्वाहा । इदमातिधृत्यै० ।

१ २ १ २ २ १ २ १ २ १२ १
संयमन्न व्यायमान्वियमन्नसमायमन् स्वाहा । इदं कृत्यै० ।

२ २ १२ २ १ २१ २२ १२१ २ २
चराचराय बृहत इदं वामामिदं बृहत् स्वाहा । इदं प्रकृत्यै० ।

१२ २२ १२ २ १ २२
द्यौरक्रान् भूमिरततनत्समुद्रᳲ समचुकुपत् स्वाहा । इदमाकृत्यै० ।

१२ २ १२ २२ १ २ १२ २ १ २
ज्योतिष्पत स्वः पतान्तरिक्षं पृथिवीं पञ्च प्रदिशः स्वाहा । इदं विकृत्यै० ।

१ २ २ १ २ १ २ २ १ २२
मनो जयिद्धृदयमजायिदिन्द्रो जयिदहमजैषं स्वाहा । इदं संकृत्यै० ।

१२ २ २ १ २ २२ १ २ २२ १ २
प्रागन्यदनु वर्त्तत रजो पागन्यतमो पेशति भ्यसा स्वाहा । इदमाभिकृत्यै० ।

१ २ १ १ २ १ १ २ १ १ २ १
अधिप । तायि । मित्रप । तायि । क्षत्रप । तायि । स्वः पता-
१ २ — २ — १
यि । धनपता २ यि । ना २ माः स्वाहा । इदमुत्कृत्यै० ।

४
ततो गानपर्वादि होमः । यथा—ॐ ओग्नायि स्वाहा । इदमाग्ने-
५ २ ४ ५ ५ ४
याय० । तद्वौहोवा स्वाहा । इदमैन्द्राय० । उच्चा स्वाहा । इदं
२ २ २२ १२
पावमानाय० । यद्यावई स्वाहा । इदमर्काय० । हाउ ।३। आयुः
१२ २ १ २ २ २
।३। सात्यम् ।३। इन्द्रन्नरो स्वाहा ।इदं द्वन्द्वाय० । हुवेवाचाम् स्वा-
१ — २ १ २ १
हा । इदं वाचोव्रताय० । ए २ । विदामघवन्विदाः स्वाहा । इदं शक्र-

९ २ २ ४र ५
यैं०। उरुचाता ३ यिजातमन्धसाः स्वाहा। इदं दशरात्राय०।
५ र २ ४ ९र ३ ४ ५र ४ ५र
वृषापा ३ वस्वधारया स्वाहा। इदं संवत्सराय०। मत्यस्मैपिपी
१ २ १ र २र २ १ २
स्वाहा। इदमेकाहाय०। पन्यंपन्यमित्सोतारः। पन्यं पन्योत्रा
५ ३ २ ४र ५
स्वाहा। इदमहीनाय०। विशः। विशोरेवो आतिथायिं स्वाहा।
२ १ २ १ २ १र — १
इदं सत्राय०। प्रत्नॅ सधस्थमा। होरसदात् स्वाहा। इदं प्राय·
२र १र २र १र २ १ २ऽ
श्चित्ताय०। आभित्वा शूरनोनुमाः स्वाहा। इदं क्षुद्राय०। आ·
र र र १ २ र र
भित्वा शूरनोनुमोवा स्वाहा। इदं दशरात्राय०। पूनानः सोम
र १ र र र र र र
धारयोवा स्वाहा। इदं सम्वत्सराय०। उहुवा ओहा औहोवा।
२ र १ २ १ र ^
पुरोजितायि स्वाहा। इदमेकाहाय०। च्योहम्। प्रसुन्वाना २
२ र र १
स्वाहा। इदमहीनाय०। मामेममाश्रमिष्मोवा स्वाहा। इदं सत्राय०।
२र र र र र र र २ र
उहुवा ओहा औहोवा। तंवोदस्मा स्वाहा। इदं प्रायश्चित्ताय०।
२र र र र र २
औहोयि यज्ञायज्ञावो अग्नया ३ ए स्वाहा। इदं क्षुद्राय०। १९॥

२ ३ १ २ ३ १ २ ३ २
अग्नआयाहीत्यृचं पठित्वा—अग्न आयाहि वीतये गृणानो
३ २ १र २र ३ १ २
हव्यदातये। निहोता सत्सि बर्हिषि स्वाहा। इदं छन्दस्यै न मम।
२ ३ १ २ ३ १ २ ३ १ २ ३ १ ३ १ २ २र २र ३ १ २
इन्द्र ज्येष्ठं न आभर ओजिष्ठं पुपुरिश्रवः। यद्दिधृक्षेम वज्र·
३ १ २ ३ १र २र
हस्त रोदसी ओभे सुशिप्रपप्राः स्वाहा। इदमारण्यै०।
३ १ २ ३ २ ३ १र २र ३ १ २ १ २
विदा मघवन्विदा गातुमनुशंसिषोदिशः। शिक्षा शचीनां
३ १ २
पते पूर्वीणां पुरुवसो स्वाहा। इदं महानाम्नीभ्यः०।

१ २ ३ १२ ३ १ २ ३ २ ३ १ २
उपास्मै गायता नरः पवमानायेन्दवे । अभि देवाँ२ इयक्षते स्वाहा । इदमुत्तरायै० ।

महन्मे वोचो भर्गो मेऽवोचो यशो मेऽवोचः स्तोमं मेऽवोचो भुक्तिं मेऽवोचः सर्वं मेऽवोचस्तन्माऽवतु तन्मा विशतु तेन भुक्षि·षीय स्वाहा । इदं ताण्ड्यब्राह्मणाय० ।

ब्रह्म च वा इदमग्रे सुब्रह्म चास्तां स्वाहा । इदं षड्विंशाय० ।

ब्रह्म ह वा इदमग्र आसीत्स्वाहा । इदं सामविधये० ।

अथ खल्वयमार्षप्रदेशो भवति स्वाहा । इदमार्षेयाय० ।

अग्निरिन्द्रः प्रजापतिः सोमो वरुणस्त्वष्टाङ्गिरसः पूषा सरस्वतीन्द्राग्नी स्वाहा । इदं देवताध्यायाय० ।

अथातः सꣳहितोपनिषदो व्याख्यास्यामः स्वाहा । इदं सꣳहितोपनिषदे० ।

नमो ब्रह्मणे नमो ब्राह्मणेभ्यो नम आचार्येभ्यो नम ऋषिभ्यो नमो देवेभ्यो नमो वेदेभ्यो नमो वायवे च मृत्यवे च विष्णवे च नमो वैश्रवणाय चोपजाय च स्वाहा । इदं वंशब्राह्मणाय० ।

देव सवितः प्रसुव यज्ञं प्रसुव यज्ञपतिं भगाय । दिव्यो गन्धर्वः केतपूः केतं नः पुनातु वाचस्पतिर्वाचं नः स्वदतु स्वाहा । इदमुपनिषदे० ।

अथातः स्वरशास्त्राणां सर्वेषां वेद निश्चयम् । उच्चनीचविशेषा द्विस्वरान्यत्वं प्रवर्त्तते स्वाहा । इदं शिक्षायै० ।

क्लृप्तो ज्योतिष्टोमोऽतिरात्रोकूथ्यः षोडशीकः स्वाहा । इदं कल्पसूत्राय० ।

कल्पसूत्रं यदा नाधीतं भवति तदा दशानां सूत्राणां मध्ये यदधीतं भवति तन्नाम्ना होमः कर्तव्यः ।

अथ वाचोवृत्तिं व्याख्यास्यामः स्वाहा । इदं व्याकरणाय० ।

समाम्नायः समाम्नातः स व्याख्यातव्यस्तमिमं समाम्नायं निघण्टव इत्याचक्षते स्वाहा । इदं निरुक्ताय० ।

अथातश्छन्दसां विचयं व्याख्यास्यामः स्वाहा। इदं छन्दोभ्यो।

पञ्च संवत्सरमयं युगाध्यक्षं प्रजापतिम्। दिनर्त्त्वयनमासाङ्गं प्रणम्य शिरसा शुचिः स्वाहा। इदं ज्योतिषामयनं विकल्पाः। इदं सूत्रमध्यगतं भवति तस्मात्प्रसिद्धं आनिषिद्धम्। ज्योतिषं उक्ता कस्मादिदं ग्राह्यं न ग्राह्यमेव तेषामयनं विकल्पाय स्वाहा। इदं ज्योतिषे०।

ततो व्याहृतिचतुष्टयम्, पुनस्त्रयञ्च हुत्वा, समिदनुपर्युक्षण-यज्ञवास्तुवस्वाहुत्यन्तं कृत्वा, दक्षिणे पाणौ रक्षाबन्धनं हिरण्य-भूषितं यवसर्षपपोटलिकां विचित्रन्तुबद्धाम्। ए। रक्षत नो रक्षि-तारो गोपायत गोपायितारः इति मन्त्रेण। "येन बद्धो बली राजा दानवेन्द्रो महाबलः। तेन त्वामनुबध्नामि रक्षे मा चल मा चले-ति"। तुवंयवाइ। क्षुदाशु २३ षाः। नृः॑पाहि शृ। णुहीगा २३ इराः। रक्षातो ३ का ३ म्। उता २३ हा ३४३ यि। त्मा २३४ नो ६ हायि। इत्यनेन वा रक्षाबन्धनम्।

ततः सर्वे धानावन्तमिति मन्त्रेण "धानावन्तं करंभिणम-पूपवन्तमुक्थिनम्। इन्द्र प्रातर्जुषस्व नः॥" असंस्वादन्निगीर्य्य, अनाचान्ता एव दधिक्राव्ण इति दधि भक्षयेयुः। "दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः। सुरभिनो मुखाकरत् प्र न आयूंषि तारिषत्।" ततः समाचान्ताः शिष्याः पङ्क्त्याकारेणोप-विशेयुः। एतस्मिन्नेव काले आचार्योऽपि प्रतिसरबन्धनादि कुर्यात्। तत आचार्यो अग्न आयाहीत्यादिऋक्त्रयं तान्येव त्रीणि सामा-नि स्वपठनादि शिष्यान्पाठयित्वा। ॐ अग्न आयाहि वीतये गृणानो

३ १ २ १२ २र ३ १ २ १ २ ३ २ ३ २ ३
हव्यदातये । निहोता सत्सि बर्हिषि ॥१॥ त्वमग्ने यज्ञानाँ्होता-
१ २ ३ २ ३ २ ३ १ २३ १ २ ३ ३ ३ १ २ ३ १ २
विश्वेषाँ्हितः । देवेभिर्मानुषे जने ॥२॥ अग्निंदूतं वृणीमहे होतारं
३ २ ३ २ ३१२ ३ १ २ ४ २र १
विश्ववेदसम् । अस्य यज्ञस्य सुक्रतुम् ॥३॥ ओग्नायि । आयाही
१ — १ — १ र २र २ १ —
३ वोयितोया २ यि । तोया २ यि । गृणानो ह । व्यदातोया २
१ — १ २र १ १ ^ ३
यि । तोया २ यि । नायि होता सा २३। त्सा २ यिवा २३४
५रर ३ ५ ४ ५ ४र५र ४ १ १
औहोवा । ही २३४ षी ॥१॥ अग्नआया हिवी । तयायि । गृ-
र र र २ १ र र २ १ २
णानोहव्यदाता २३ यायि । निहोतासत्सि बर्हा २३ यिषी ।
१ ^ ३ ५र र २ १ १११ ४ ५
बर्हा २ यिषा २३४ औहोवा । बर्हीं ३ षा २३४५ ॥२॥ अग्न-
४र ५र ४ ४ १ र र २ २ २ २ ३
आयाहि । वा५यितयायि । गृणानाहव्यदा १ ता ३ ये । निहोता
५ १ २ १ ५ ५
२३४ सा । त्सा २३ यिवा ३। हा २३४ यिषो ६ हायि ॥३॥
एवं पठित्वा, ब्राह्मणभोजनपूर्णपात्रादिसङ्कल्पं कृत्वा, वामदेव्यं गायेत् । इत्युपाकर्मप्रयोगः ॥

### अथोत्सर्गप्रयोगः ।

ततस्तद्दिनमारभ्य भाद्रपदमासीयहस्तादधस्तनपुष्यनक्षत्रं यावद् गृहमानीतानामृषीणां प्रत्यहं पूजनम् । पुष्यनक्षत्रयुतेऽहनि प्रातरेव साशिष्यः प्राङ्मुखो उदङ्मुखो वा ग्रामाद्बहिर्नद्यादौ गत्वा, यथाविधिना ऋषीन्पूजयेत् । तत्र देशकालौ सङ्कीर्त्य "छन्दसामाप्यायनार्थं यातयामत्वदोषनिवृत्तये वेदोत्सर्गकर्मणि ऋषीणां पूजनतर्पणमहं करिष्ये" इति सङ्कल्प्य, आवाहनं विना पूर्ववत् ऋषीन्सम्पूज्य, तथैव तर्पयित्वा, पुनः सम्पूज्य, ऋषीन्प्लव-

१ २ २ २ २ ३
साम्ना प्लावयित्वा । हा । वो ३ हा । वो ३ हा ३ । हा । ओ २३४

५ २ ^३ ५ २ ^३ ५ २ ^
वा । हायि । पूनाना २३४: सो । माधारा २३४ या । आपो-
३ ५ २ ^३ १ २ ^३ ५
वा २३४ सा । नो अर्षा २३४ सी । आरत्ना २३४ धाः ।
२ ^ ३ ५ २ ^ ३ ५ २ ^ ३
यो नीमा २३४ त्वां । स्यासीदा २३४ सीं । उत्सोदा २३४
५ २ ^३ ५ १ २ २ २ २
थि वो । हायिरण्या २३४ याः । हा । वो ३ हा । वो ३ हा
२^ ३ ५ २ ५१ १ २ १ २
३ । हा । ओ २३४ वा । हा ३४ । औ होवा । ए ३ । अति
१ २१ ११ २ १^३ १ १ १
विश्वानि दुरितातरे मा २३४५ ॥ प्लवोऽन्वहं भवति समुद्रं वा एते प्रस्नान्ति ये संवत्सरमुपयन्ति यो वा अप्लवः समुद्रं प्रस्नाति न स तत उदेति यत्प्लवो भवति स्वर्गस्य लोकस्य समष्ट्या अति-विश्वानि दुरिता तरेमेति यदेवैषां दुष्कृतं दुःशस्तं तदेतेन तर-न्ति ॥ ततो निमज्ज्याचम्य गृहमागच्छेयुः । तत आपुनरुपाकरणा-च्छन्दसामनध्यायोऽन्यत्र ब्रह्मयज्ञात् । इत्युत्सर्गप्रयोगः ॥

## अथ पुष्टिकर्मणां प्रयोगः ।

प्रथमारम्भे त्रिरात्रमुपवासः । ततः प्रातः करिष्यमाणगोऽ-नुमन्त्रणकर्मणः पूर्वेद्युः प्रदोषे सायंहोमानन्तरं वृद्धिश्राद्धम् । “गवां निःकालप्रवेशनकर्माङ्गं नान्दीश्राद्धमहं करिष्ये” इति सङ्कल्पः । ततः प्रातर्होमोत्तरं कुशपाणिः प्राङ्मुख उपविश्याचम्य, प्राणानायम्य, देशकालौ स्मृत्वा “गवां शरीरे सङ्ख्यया च पुष्टि-कामोऽहं अरण्यं नीयमानानां गवां अनुमन्त्रणकर्म करिष्ये” इति सङ्कल्प्य, आलोकयन्स्पृष्ट्वा अनुमन्त्रयेत् । इमा मे विश्वतो-वीर्य इति प्रजापतिरनुष्टुप् इन्द्रः गवामनुमन्त्रणे विनियोगः ।

इमा मे विश्वतोवीर्यो भव इन्द्रश्च रक्षणम् । पूषँस्त्वं पर्या-वर्त्तयानष्टा आयन्तु नो गृहान् ॥

सायं प्रातरागता “इमा मधुमतीर्मह्यमनष्टाः पयसा सह । गाव आज्यस्य मातर इहेमाः सन्तु भूयसीः ॥”

सर्वासां सहानुमन्त्रणस्पर्शनासम्भवादालोकयन्ननुमन्त्रयेत् । इति गोऽनुमन्त्रणाख्यं प्रथमं पुष्टिकर्म ॥

अथ ललाटलिहनाख्यं पुष्टिकर्म ।

तच्च अधृतगर्भाया गोः प्रथमजातस्य वत्सस्य कर्त्तव्यम् । नात्र वृद्धिश्राद्धम् । त्रिरात्रोपवासाभावश्च । प्रसवानन्तरं मातुः प्रलेहनात्पूर्वं जिह्वया ललाटमुल्लिह्य मनसा पठितमन्त्रेण निगिरयेत् । आचमनादि देशकालौ सङ्कीर्तनान्ते "गवां पुष्टिकामोऽहं ललाटलिहनाख्यं कर्माहमिति" सङ्कल्पः । गवां श्लेष्मासीत्यस्य प्रजापतिर्यजुः श्लेष्मा ललाटलिहने विनियोगः । ॐ गवां श्लेष्मासि गावो मयि श्लिष्यन्तु । इत्याद्यं पुष्टिकर्म ॥

अथ द्वितीयम् ।

सर्वासां गवां प्रसवोत्तरमेतत्कर्म । तत्र पूर्वं त्रिरात्रमुपवासः । कर्माहे प्रातर्वृद्धिश्राद्धे "गोपुष्टिकर्माङ्गं वृद्धिश्राद्धमिति" सङ्कल्पः । सायंहोमोत्तरं रात्रौ गवामावासगृहेऽग्निं संस्थाप्य, अध्यर्थमथितं दधि उष्णीकृते नवनीते अधःस्थितं वा विलयनमेतयोरन्यतरेण होमः । अत्र क्षिप्रहोमविधिः । देशकालौ स्मृत्वा "गवां पुष्टिकामोऽहं होमं करिष्ये ।" अधिश्रयणं विना उत्पवनादिसंस्कारान्विधाय, स्रुवं संमार्ज्य, एकामाहुतिं जुहुयात् । अस्य प्रजापतिरनुष्टुप् पूषा विलयनहोमे विनियोगः ।

सङ्गृहण सङ्गृहाण ये जाताः पशवो मम । पूषैषा१ँ शर्म यच्छतु यथा जीवन्तो अप्ययात् स्वाहा । इदं पूष्णे न ममेति त्यागः । ततोऽनुपर्युक्षणादि वामदेव्यगानान्तम् । इति द्वितीयं पुष्टिकर्म ॥

अथ तृतीयम् ।

पूर्वं त्रिरात्रमुपवासः । पूर्वाह्णकालः । "पुष्टिकर्माङ्गं नान्दीश्राद्धमहं करिष्ये" इति सङ्कल्पः । ततः पूर्वाह्णे आचमनादि देशकालकीर्तनान्तं विधाय "गवां पुष्टिकामोऽहं वत्समिथुनयोः कर्णे

